---

nombre de cas les noms soient différents, ce qui est dû à la façon de couper les mots dans le vers.

La version du *śivasahasranāma* que l'on trouve dans la *śaṅkara-saṃhitā* du *Skandapurāṇa* est appelée *āgamasahasranāma* (noms existants dans les *agama*). La version du *Padmapurāṇa* est appelée *vedasāraśivasahasranama.* Ces deux versions sont différentes des autres versions qui ont ete mentionnées ci-dessus.

Les versions que l'on trouve dans le *Dīptāgama* et le *Suprabhedāgama* (manuscrit) sont semblables. Il semble qu'il ait quelque ressemblance entre les versions de ces deux *āgama* et celles du *Liṅga-purāṇa* et du *Śivapurāṇa.* Mais l'ordre des vers n'est pas le même et la version purāṇique a 24 vers qui n'ont pas de parallèle dans celle de *āgama.* Le *Suprabhedāgama* (manuscrit) donne une énumération des noms pou chaque groupe de *kalaśa* et, par conséquent, on doit couper les mots dans le vers d'une certaine façon pour arriver au chiffre nécessaire.

En plus des variantes, la façon de couper les mots qui forment les noms est aussi différente dans le *Liṅga-purāṇa*, si l'on suit son commentaire orthodoxe, la *Śivatoṣiṇī.*

Ainsi, la différence des noms et les différences dans l'ordre des vers et dans la division des mots dans les vers, que l'on trouve entre les versions purāṇiques et les versions āgamiques font que l'on peut penser qu'il s'agit à la base de deux versions différentes.

Comme beaucoup de noms de Śiva trouvés dans le texte du *Rauravāgama* sont les mêmes que ceux que l'on trouve dans la version āgamique, nous donnons ci-dessous le texte du *Dīptāgama* pour aider à faire une étude comparative.

भवः शिवो हरो रुद्रः पुष्कलः पुरुषोत्तमः । अग्रगण्यस्सदाचारः सर्वः शम्भुर्महेश्वरः ॥
ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात् । वरीयान्वरदो वन्द्यः शंकरः परमेश्वरः ॥
गङ्गाधरः शूलधरः परार्थैकप्रयोजनः । सर्वज्ञः सर्वदेवादिर्गिरिधन्वा जटाधरः ॥
चन्द्रापीडश्चन्द्रमौलिर्विद्वान्विश्वामरेश्वरः । वेदान्तसारसन्दोहः कपाली नीललोहितः ॥
ध्यानाहारोऽनवच्छेद्यो गौरीभर्ता गणेश्वरः । अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ॥
ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः । वामदेवो महादेवः पटुः परिवृढो मृडः ॥
विश्वरूपो विरूपाक्षो वागीशः शुचिमत्तरः । सर्वप्राणश्च सर्वादिर्वृषाङ्को वृषवाहनः ॥
ईशः पिनाकी खट्वाङ्गी चित्रवेषश्चिरन्तनः । महेष्वासो महायोगी गोप्ता ब्रह्माङ्गहृज्जटी ॥
कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः । उन्मत्तश्चूडचक्षुष्यो दुर्वासाः पुरशासनः ॥
मृगायुधः स्कन्दगुरुः परमेष्ठी परायणः । अनादिमध्यनिधनो गिरीशो गिरिबान्धवः ॥
कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमो गुरुः । सामान्यदेवः कोदण्डी नीलकण्ठः परश्वधी ॥
विशालाक्षो मृगव्याधः सुरेशः करुणाकरः । धर्माधर्मः क्षमाक्षेत्रं भगवान् भगनेत्रभित् ॥
उग्रः पशुपतिस्तार्क्ष्यः प्रियभक्तः प्रियंवदः । दाता दयाकरो दक्षः कपर्दी कामशासनः ॥
श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः । लोकोत्तमः स्फुटालोकस्त्र्यम्बको नागभूषणः ॥
अन्धकारिरघद्वेषी भास्करो भक्तवत्सलः । वीतदोषोऽक्षयगुणो दक्षारिः पूषदन्तभित् ॥
धूर्जटिः खण्डपरशुः सकलो निष्कलो नटः । अकालः सकलाधारः पाण्डुराङ्गो मृडोऽनघः ॥
पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः । सामगेयप्रियः क्रूरः पुण्यकीर्तिरनामयः ॥
मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः । जीवितान्तकरोऽनन्तो वसुरेता वसुप्रदः ॥

सद्गतिस्सत्कृतिः सत्ता कालकण्ठः कलाधरः। मानी मुनिर्महाकालः सद्भूतिः सत्परायणः॥
चन्द्रसंजीवनः शास्ता लोकगूढोऽमराधिपः। लोकबन्धुर्लोकनाथः कृतज्ञः कीर्तिभूषणः॥
अनपायोऽक्षरः शान्तिः सर्वशस्त्रभृतां वरः। तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः॥
शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः। समावृत्तो निवृत्तात्मा धर्मप्रज्ञः सदाशिवः॥
अकल्मषश्चतुर्बाहुर्धनावासो दुरासदः। दुर्गमो दुर्मुखो दुर्गः सर्वायुधविशारदः॥
अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः। शुभाङ्गो लोकसारङ्गो जगदीशो जनार्दनः॥
भस्मशुद्धिकरो मेरुरूर्जस्वी शुद्धविग्रहः। हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः॥
महाह्रदो महागर्तः सिद्धबृन्दारवन्दितः। व्याघ्रचर्माम्बरधरो महाभूतो महानिधिः॥
अमृतांशोऽमृतवपुः पञ्चयज्ञः प्रभञ्जनः। पञ्चविंशतितत्त्वस्थः पद्मनाभः परान्तकः॥
सुलभः सुव्रतश्शूरो वाङ्मयैकनिधिर्निधिः। वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः॥
आश्रमः क्षमणः क्षामो ज्ञानवानचलश्चलः। प्राणभृत्प्राणधृग् ज्ञेयः सुपर्णो वायुवाहनः॥
धनुर्धरो धनुर्वेदो गुणराशिर्गुणाधिकः। अनन्तसृष्टिरानन्दो दण्डो दमयिता दमः॥
अभिवन्द्यो महाकायो विश्वकर्मा विशारदः। वीतरागो विनीतात्मा तपस्वी भूतभावनः॥
उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः। कल्याणः प्रकृतिः कल्यः सर्वलोकप्रजापतिः॥
तरस्वी तारको धीमान्प्रधानः प्रभुरव्ययः। लोकपालोपगीतात्मा कल्पादिः कमलेक्षणः॥
वेदशास्त्रार्थतत्त्वज्ञो नियमो नियताश्रयः। चन्द्रः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः॥
भक्तिगम्यः परंब्रह्म मृगबाणार्पणोऽनघः। अद्रिरद्र्यालयः कान्तः परमात्मा जगत्प्रभुः॥
सर्वकर्मफलस्त्वष्टा मङ्गल्यो मङ्गलप्रदः। महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः॥
अहस्संवत्सरो व्याप्तः प्रमाणं परमं तपः। संवत्सरकरो मन्त्रः प्रत्ययः सर्वदर्शनः॥
अजः सर्वेश्वरस्सिद्धो महारेता महाबलः। योगी योग्यो महाबीजः शुद्धः सर्वादिरच्युतः॥
वसुर्वसुमनास्सत्यः सर्वपापहरोऽव्ययः। अमृतश्शाश्वतः शान्तो बाणहस्तः प्रतापवान्॥
कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः। भ्राजिष्णुर्भोजनं भोक्ता लोकनेत्रो धराधरः॥
अतीन्द्रियो महामायः सर्वावासश्चतुष्पदः। कालयोगी महानादो महोत्साहो महाबलः॥
महाबुद्धिर्महावीर्यो भूतचारी पुरन्दरः। निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः॥
अनिर्देश्यवपुः श्रीमान्सर्वकारी मितोऽमितः। बहुरूपो बृहन्मायो नियतात्मा निजोद्भवः॥
ओजस्तेजो द्युतिधरो नर्तकः सर्वलासकः। नृत्तप्रियो नित्यनृत्तः प्रकाशात्मा प्रतापवान्॥
बुद्धिः स्पष्टाक्षरो मित्रः समानः सारसंप्लवः। युगादिकृद्युगावर्तो गम्भीरो बलवाहनः॥
इष्टो विशिष्टः शिष्टेष्टः शिवदायी शिवाकृतिः। अपां निधिरधिष्ठानं विजयो जयकालविद्॥
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचस्तथा। विमोचनः सुरगणो विद्येशो विबुधाश्रयः॥
बालरूपो बलोन्माथी विकर्ता गहनो गुहः। करणं कारणं कर्ता सर्वबन्धविमोचनः॥
व्यवसायो व्यवस्थानं स्थानदो जगदादिकः। राजराजप्रियो रामो राजचूडामणिर्विभुः॥
वीरेश्वरो वीरभद्रो वीरासनविधिर्विराट्। वीरचूडामणिर्वेत्ता मुकुन्दः कुन्दवत्सलः॥
चक्रहस्तः शूलपाणिः शिपिविष्टः शिवाश्रयः। वालखिल्यो महाहारो वामनो बादरायणः॥
अभिवाद्यः शरण्यश्च सुब्रह्मण्यः सुधाकविः। मघवान् कौशिको गोमान्विरामः सर्वसाधनः॥
ललाटाक्षो विश्वदेहः सारः संसारचक्रकृत्। अमोघदण्डो मध्यस्थो हरिणो ब्रह्मवर्चसी॥
परमार्थः परमयः परार्थः पाण्डुवत्सलः। रुचिर्वररुचिर्वन्द्यो वाचस्पतिरहर्पतिः॥
रविर्विरोचनः स्कन्दः शास्ता वैवस्वतोऽर्जुनः। युक्तिरुत्तमकीर्तिश्च शान्तरागः पुरंजयः॥
कैलासपतिः कामारिरसविता रविलोचनः। विद्वत्तमो वीतभयो विश्वभर्ताऽनिवारितः॥

नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः। दुराश्रयो विश्वसहो ध्येयो दुःस्वप्ननाशनः॥
उत्तारणो दुष्कृतिहा दुर्धर्षो दुःसहो हयः। अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः॥
विश्वगोप्ता विश्वभर्ता सुवीरो रुचिराङ्गदः। जननो जनजन्मादिः प्रीतिमान्नतिमानृतः॥
वसिष्ठः काश्यपो भानुर्भीमो भीमपराक्रमः। [प्रभवः सत्पथाचारो महाकायो महामनाः॥
जनाधिपो महावीरः सकलागमपारगः। तत्त्वं तत्त्वविदेकात्मा विभूतिर्भूतिभूषणः॥
ऋषिर्ब्राह्मणविज्जिष्णुः जन्ममृत्युजरातिगः। यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो मेघवाहनः॥]
महेन्द्रो दुर्भरः सेनी ज्ञानाङ्गो ज्ञानवाहनः। पञ्चब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः॥
आत्मयोनिरनाद्यन्तः षड्ऋतुः सप्तलोकधृत्। गायत्रीवल्लभः प्रांशुर्विश्ववासः प्रभाकरः॥
शुचिर्गिरिरितस्सम्राट् सुरेशः सुरशत्रुहा। अमोघोऽरिष्टदमनः प्रमुक्तो विगतज्वरः॥
स्वयंज्योतिरतिज्योतिरात्मज्योतिरचञ्चलः। पिङ्गलः कपिलश्मश्रुः शास्त्रनेत्रस्त्रयीतनुः॥
ज्ञानस्कन्धो महज्ज्ञानी मरुत्पतिरुपप्लवः। भगो विवस्वानादित्यो लोकचारी दिवस्पतिः॥
उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः। नक्षत्रमाली नाकेशः पद्मायतविलोचनः॥
पितृपादः पापहारी नरकारिर्निभोगतिः। हृत्पुण्डरीकमध्यस्थः शुकः श्येनो वृषाकपिः॥
उग्रो ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः। अधर्मशत्रु क्षोभ्यः पुरुहूतः पुरुष्टुतः॥
ब्रह्मगर्भो महागर्भो धर्मो धेनुर्धनागमः। जननेता च सुखदः कुमारः कुशलागमः॥
हिरण्यवर्णो ज्योतिष्मानुपेन्द्रस्तिमिरापहः। अरोगो नयनाध्यक्षो विश्वासो विश्वसद्यजः॥
ब्रह्मज्योतिः सुवर्धामा महाज्योतिरनुक्रमः। मातामहो मातरिश्वा नागहारोऽप्यनन्तधृत्॥
पुलस्त्यः पुलहोऽगस्त्यो जमदग्निः पराशरः। निरावरणविज्ञानी विरिञ्चो विष्टरश्रवाः॥
आत्मभूरग्निनेत्री च ज्ञानमूर्तिर्महायशाः। लोकचूडामणिर्वीरश्चण्डः सत्यपराक्रमः॥
व्यालकल्पो महाकल्पः कल्पवृक्षः कलाधरः। अलंकरिष्णुरचलो विष्णुर्विमललोचनः॥
अशुः शब्दपतिर्वेगी प्लवनः शिखिसारथिः। असंसृष्टो निधिः शुक्रः प्रमाथी पादपाशनः॥
वसुश्रवा हव्यवाहः प्रतप्तो विश्वभोजनः। जप्यो ज्वरादिशमनो लोहिताक्षस्तनूनपात्॥
पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा। [निदाघस्तपनो मेघः पक्षः परपुरञ्जयः॥]
सुखानिलः सुनिष्पन्नः सुभगः शिशिरात्मकः। वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः॥
अङ्गिरा भृगुरात्रेयो विमलो विश्ववाहनः। भावनः पुरुजिच्छक्रस्त्रैविद्यो नरवाहनः॥
मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः। जमदग्निर्जलनिधिर्विवाहो विश्वकारकः॥
अधरोऽनुत्तरो ज्ञेयो ज्येष्ठो निःश्रेयसालयः। शैलोन्नततनुर्दाहो दानवारिररिन्दमः॥
चामुण्डाजनकश्चारुर्निश्शल्यो लोकशल्यहृत्। चतुर्वेदश्चतुर्बाहुश्चतुरश्चत्वरप्रियः॥
आम्नायोऽथ समाम्नायस्तीर्थदेवः शिवानलः। बहुरूपो महारूपस्सर्वरूपश्चराचरः॥
न्यायनिर्वाहको न्याय्यो न्यायगर्भो निरञ्जनः। सहस्रमूर्धा देवेन्द्रस्सर्वशस्त्रविभञ्जनः॥
मुण्डो विरूपो विकृतो दण्डी दान्तो गुणोत्तमः। पिङ्गलाक्षोऽथ हर्यक्षो नीलग्रीवो निरामयः॥
सहस्रबाहुः सर्वेशः शरण्यस्सर्वलोकधृत्। पशुपाशः परंज्योतिः परावारः परापरः॥
पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः। परापरज्ञो वरदः सुरेशः सुमहास्वनः॥
देवासुरगुरुर्देवो देवासुरनमस्कृतः। देवासुरमहामन्त्रो देवासुरमहाश्रयः॥
देवादिदेवो देवर्षिर्देवासुरवरप्रदः। देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः॥
सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः। ईड्योऽनीड्यः सुरव्याघ्रो देवसिंहो दिवाकरः॥
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः। शिवज्ञानरतः श्रीमान् शिवः श्रीपर्वतप्रियः॥
वज्रहस्तोऽथ विष्टम्भी विष्वक्सेनो निशाचरः। निशान्तो लोकचारी च धनाध्यक्षो धनाधिपः॥

नन्दी नन्दीश्वरो नन्दो नग्नव्रतधरश्शुचिः । लिङ्गाध्यक्षः सुराध्यक्षो लोकाध्यक्षो युगावहः ॥
स्ववशः स्वागतः स्वर्गः स्वरः स्वरमयः स्वराट् । बीजाध्यक्षो बीजकर्ता धर्मकृद्धर्मवर्धनः ॥
दम्भोऽदम्भो महादम्भः सर्वभूतमहेश्वरः । लोककर्ता मृगपतिर्महाकर्ता महौषधिः ॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः । नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी ॥
सोमपोऽमृतपः सौम्यो महानीतिर्महामतिः । अजातशत्रुरालोकः संभाव्यो हव्यवाहनः ॥
लोककारो वेदकारः सूत्रकारः सनातनः । महर्षिः कपिलाचार्यो विश्वदीप्तिर्विलोचनः ॥
पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्स्वधा । त्रिसामा सामगः सर्वः सर्वगः सर्वगोचरः ॥
उपहारप्रियोऽमोघः कर्णिकारप्रियः कविः । श्रीपतिः श्रीनिवासश्च शीलवान् भिषगुत्तमः ॥
गङ्गाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थितः । विजितात्मा विधेयात्मा भूतवाहनसारथी ॥
सगुणो गुणकार्यश्च सुकीर्तिश्छिन्नसंशयः । कामरूपः कामपालो भस्मोद्धूलितविग्रहः ॥
भस्मप्रियो भस्महस्तो भस्म स्कन्दः कृतागमः । ज्योतिर्मयो निराकारो जलनाथो जलेश्वरः ॥
तुम्बवीणो महाकामोऽप्यशोकः शोकनाशनः । त्रिलोकात्मा त्रिलोकेशः शुद्धः शुद्धिरधोक्षजः ॥
अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विरूपकः । परशीलः परगुणो मारो मारधनो मयः ॥
ब्रह्मा विष्णुः प्रजापालो हंसो हंसपतिर्मखः । वेधा विधाता धाता च स्रष्टा भर्ता चतुर्मुखः ॥
कैलासशिखरावासी सर्ववासः सदागतिः । हिरण्यगर्भो द्रुहिणः पुरुषः पूर्वजः पिता ॥
भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः । सद्योजातोऽर्थविद्ब्राह्मो ब्रह्मण्यो ब्राह्मणप्रियः ॥
वेदप्रियो वेदनाथो देवको देवचिन्तकः । विषमाक्षो विशालाक्षो विषदो विषवर्धनः ॥
निर्मदो निरहंकारो निर्मोहो निरुपद्रवः । दर्पहा दर्पदो दृप्तः सनर्तः परिवर्तकः ॥
सप्तजिह्वः सहस्रांशुः स्निग्धः प्रकृतिदक्षिणः । भूतभव्यो भवन्नाथः प्रभावान्भ्रान्तिनाशनः ॥
अर्थोऽनर्थो महाकोशः परकार्यैकपण्डितः । निष्कलङ्कः कृतानन्दो निर्व्याजो व्याजमर्दनः ॥
सत्त्ववान् सात्त्विकः सत्यः कीर्तिस्तम्भः कृतागमः । पुण्यवन्द्यो गुणग्राही नैकाक्षो नैकधर्मकृत् ॥
सुप्रीतः सुमुखः सूक्ष्मः सुखण्डो दक्षिणो नयः । नन्दः स्कन्दधरो धुर्यः प्रकटः प्रीतिवर्धनः ॥
अयाचितः सर्वसहो विदग्धः सर्ववाहनः । अमृतश्चेति विख्याताः पदं प्रति नमोऽन्तकम् ॥

[1] A et C: त्रिणेत्रश्चतुर्भुजाः सर्वे pour चतुर्भुजास्त्रिनेत्राश्च.
[2] B: द्विपादादिविभूषिताः.
[3] A et C: पिधाय च pour पिधानकम्.
[4] A: करे pour करैर्; C: परे.
[5] B: देवतास्त्वन्तराननाः.
[6] C: धृत्वा pour ध्यात्वा.
[7] A: पुण्याहं प्रोक्षणं.
[8] voir *Vīrāgama*, *paṭala* 55, vers 2-10 pour les détails du *śāntihoma*:

शान्तिहोममहं वक्ष्ये शृणुष्व कमलासन । पूर्वोक्तमण्डपं वापि अग्निशालामथापि वा ॥
अग्निकुण्डेषु होतव्यं स्थण्डिले वापि कारयेत् । चतुरश्रं वाथ वृत्तमग्निकुण्डं तु कारयेत् ॥
त्रिमेखलासमायुक्तमथवाप्येकमेखला । एवं तत्रैव संकल्प्य दर्पणोदरवत्कृतम् ॥
शोधनं क्षालनं चैव शोषणं पाचनं तथा । मथित्वा तु गृहीत्वा च हृदयेन प्रतिष्ठितम् ॥